# श्रीभोगापुरेशहनुमत्स्तोत्रम्

प्रणमतु मम मूर्धा भारती प्राणभार्या-
भ्रगभुजगपभर्गेन्द्रादिदेवर्षिवन्द्यम् ।
सकलसुरपतेऽङ्घ्रीन्दीवरद्वन्द्वमुग्रो-
ग्रतररिपुकुलघ्नं नाथ भोगापुरेशम् ॥ १॥

यत इतरमृते त्वां मामनुग्राहकं द्राग्
सुपवनपविजाने नैव जाने न जाने ।
विधिकरनिकरेतश्चाधमं मां प्रपन्नं
ह्यव किल कृपया त्वां नौमि भोगापुरेशम् ॥ २॥

वरसदनुजिघृक्षात्तेन तेऽनल्पशक्ते
कपिवरवपुषाऽऽविर्भूय भोगापुरे भोः ।
विषयविषविशिष्टाशेषदोषान्तकं त्वां
निखिलनिजजनानां नौमि भोगापुरेशम् ॥ ३॥

असदसुमदतिव्यामोहनार्थं त्विहादा-
वनिमिषमधुकेस्वीकर्तुमासप्तघस्रम् ।
उपयम महसुप्राग्वर्चलादोर्ग्रहं त्वां
निजजनकृतसेवां नौमि भोगापुरेशम् ॥ ४॥

स्वजनगणगते कौण्डिन्यगोत्रेऽथ कृष्णे
सति तव वरसेवां कर्तरीहाभ्यकार्षीत् ।
स्वजनवरदरूपं व्यक्तमञ्जोन्नतं त्वां
सदयहृदयभक्त्या नौमि भोगापुरेशम् ॥ ५॥

निजजयविजयौ यो जन्मात्मजत्विज-
निजयदपज्जाम्युज्जनिं द्वन्द्वभाजम् ।
विविधवृजिनसङ्घान्मां समभ्युद्धरन्तं
कजजनुरनुजं त्वां नौमि भोगापुरेशम् ॥ ६॥

खलकदन कदाचिन्मूर्तिभेदेऽपि तत्रा-
धिकतरनिजतेजो दर्शयन् शङ्कितान् स्वम् ।
अनुदिनमनुकम्पा मय्यलं नाथ तेऽस्तु
स्वविधिकरजजे त्वां नौमि भोगापुरेशम् ॥ ७॥

कपिकुलतिलकेशाशोत्तमं स्वाशु भग्नं
तव पदयुगलं मे सेवितुं प्रादित त्वम् ।
पदकमलनिषेवा नाथ ते मां हि नेष्य-
त्युचितगतिमलं त्वां नौमि भोगापुरेशम् ॥ ८॥

नुतिगतपदमुक्तामालयेत्यष्टपद्य-
प्रवरतमगुणिन्या मालिनी कृष्णजन्या ।
सुफलमिह हनूमन्मूर्तिरेषाप्यमुत्र
स्तुतिमथ पठते तामञ्जसा ते प्रदद्यात् ॥ ९॥

वाग्विट्त्रिवञ्चसहस्रकेन्द्रमुनिमुख्यादिप्रणीतार्हण
प्राण त्वं कृपया त्वदङ्घ्रिनिरतं नः पोषकं चान्वहम् ।
त्वद्भक्तस्वभिमन्त्रिताक्षतशिखं तत्कामितं पूरयन्
श्रीमद्वेङ्कटराजमाश्वव चिरं भोगेश तुभ्यं नमः ॥ १०॥

।। इति श्रीभोगापुरेशहनुमत्स्तोत्रं सम्पूर्णम् ।।